क्षिणे खगरुत्मन्तं स्पृशन्तं पृष्ठदेशतः । शङ्खचक्रधरं चोर्ध्वे पद्मासनगतं विभुम् ॥
जयेदुपचारैस्तमाचार्योवाऽपिभोद्विजाः । नीलोत्पलानांमालांतुभक्त्यादेवायदापयेत्
शम्यांपूजयित्वैवं दशकोट्यघनाशनम् । प्रार्थयेत्प्राञ्जलिर्भूत्वा मन्त्रमेतं समुच्चरन्
धुसूदनदेवेश ! नमस्ते माधवीप्रिय ! । कृपावारांनिधे ! पतितं मां भवार्णवे ॥
कादश्यां चतुर्बाहुं शङ्खचक्रगदाधरम् । नारायणं पद्मसंस्थं पञ्चनिष्कविनिर्मितम् ।
तदर्द्धं निर्मितं वाऽपि पूजयेत्पद्ममालया ॥ ४० ॥
वेद्यं पायसं दद्यात्सितां रम्भाफलानि च । नानाविधञ्च नैवेद्यं दत्त्वासम्प्रार्थयेन्मुदा
रायण! नमस्तेऽस्तु भवसागरतारण !। त्राहि मां पुण्डरीकाक्ष शरणागतवत्सल !
कादशेन्द्रियकृतं पापराशिमनुत्तमम् । अनादिभवनिर्व्यूढं नाशयेत्पूजितः प्रभुः ॥
दश्यां यज्ञवाराहं पूजयेत्स्वर्णनिर्मितम् । चन्दनागुरुकर्पूरलेपनैश्चम्पकस्रजा ॥ ४४
नाविधापूपसारा भक्ष्यभोज्यफलान्विताः । निवेद्य प्रार्थयेद्देवं स्तुतिमेतांसमुच्चरन्
लयार्णवसम्मग्नां धरणीं धृतवानसि । किन्न शक्तोममोद्धारे पतितस्याऽङ्घ्रिपङ्कजे
तन्मामुद्धर गोविन्द! निमग्नं शोकसागरे ॥ ४६ ॥
ब्दो द्वादशमासो वै यावदब्दकृतानि तु । पापानि महदल्पानि इतः पूर्वेषु जन्मसु ।
तद्विनाशयते देवो द्वादश्यामर्चितो नृणाम् ॥ ४७ ॥
योदश्यां तु प्रद्युम्नं शङ्खचक्रवराभयान् । धारयन्तं पद्मगतं चतुर्निष्कविनिर्मितम् ॥
उपचारैर्यथाप्रोक्तैःपूजयेद्भक्तितो नरः । अशोकपाटलीमालांचन्द्रपूर्णांसमुज्ज्वलाम्
वेद्यं चैव पक्वान्नं फलं पक्वं मनोहरम् । दत्त्वा नमस्कृतिंकुर्वन्प्रार्थयेत्प्राञ्जलिःशुचिः
वप्रद्युम्न! कामानांपूरककामरूपधृक् !। कामाश्चसफलाःसन्तुःकामपाल! नमोऽस्तुते
चतुर्दश्यांनरहरिंपूजयेत्कनकाकृतिम् । वक्षःस्थलस्थयालक्ष्म्याप्रीयमाणंसटोज्ज्वलम्
व्यात्ताननं साट्टहासं योगपट्टाब्जसंस्थितम् । सुतीक्ष्णनखरं देवंसर्वापद्विनिवारणम्
चतुर्भिर्हेमनिष्कैश्च घटितं शुभलक्षणम् । पूजयेत्पूर्ववद्देवं सोपहारं सुभक्तितः ॥ ५४
जपाकुसुममालां च जातीपुष्पस्रजं तथा । दत्त्वा पुष्पाञ्जलीन्पादेप्रणम्यसप्रदक्षिणम्
यथाहिरण्यकशिपुं लोकानांहितकाम्यया । व्यदारयस्तथा पापसङ्घं नाशयपूजितः

एवं सम्प्रार्थ्य नृहरिं प्रणम्य दण्डवत्क्षितौ। निर्वर्त्यात्रतमेवंतद्व्रतीपञ्चदिना
पञ्च पञ्च प्रदीपांस्तु दिवारात्रौ प्रदापयेत् ॥ ५७ ॥
वस्त्रयुग्मान्पञ्चपञ्चच्छत्रोपानद्युगंतथा। सयज्ञसूत्रान्कलशान्पञ्च पञ्च फलानि
भोजनान्ते द्विजेभ्यश्च प्रदद्याच्छ्रद्धयान्वितः ॥ ५६ ॥
रात्रौ जागरगीताद्यैस्तथा नानोपहारकैः। तोषयेद्वासुदेवं तु पुराणपठनेन तु।
पौर्णमास्युषसि स्नात्वा श्रीकृष्णस्याऽन्तिकं व्रजेत् ॥ ६१ ॥
रामंकृष्णंसुभद्रांचपूजयित्वायथाविधि। स्नपनंकारयित्वाऽथद्रष्टावाशाखचौ
स्नानं कृत्वा पुनः सिन्धौ गृहमागत्य तत्र वै।
यत्र विष्णोर्मूर्त्तयस्ताः कुम्भस्था मन्त्रपूजिताः ॥ ६३ ॥
तासां पश्चिमतोवह्निंसमाधाययथाविधि। अग्निकार्यंप्रकुर्वीतस्वैःस्वैर्मन्त्रैःपुनं
प्रणवादिचतुर्थ्यन्तंनमोऽन्तं नामईरयेत्। देवानां मूलमन्त्रस्तुस्वाहान्तोहोमस
चरोराज्यस्य समिधां पलाशानां पृथक्पृथक्। एकैकं देवमुद्दिश्यजुहुयाच्च शतं
तस्य पुष्पशतं चैव जहुयात्तदनन्तरम्। पूर्णाहुतिं ततो हुत्वा ब्रह्मणे दक्षिणां
आचार्यो दक्षिणां दद्यात्सुवर्णं धेनुमेवच। स्वर्णशृङ्गींरौप्यखुरांनानोपकरणैः
महार्घ्यवस्त्रदानानि येन तुष्यति वा गुरुः। सर्वोपकरणैर्युक्ताः प्रतिमाश्च नि
ब्राह्मणान्भोजयेत्सर्पिः खण्डयुक्तैश्चपायसैः। एतद्व्रतं समाख्यातं ज्येष्ठपञ्चकमु
अनुष्ठाय नरो भक्त्या स्नानदर्शनजं फलम्। समग्रं लभते विप्रास्तदा नैवाऽत्र सं
एकादशी या तु मध्ये निर्जलासाप्रकीर्तिता। एकांतांभक्तियुक्तायेयथाविधिं
यावज्जीवकृताः सर्वा एकादश्यो न संशयः। व्रतराजमिमं कृत्वा सर्वव्रतफलं
यान्यान्समीहते कामांस्तांस्तानाप्नोत्यसंशयः ॥ ७४ ॥

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णव
खण्डान्तर्गतोत्कलखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसम्वादे
ज्येष्ठपञ्चकादितवर्णनंनाम द्वात्रिंशोऽध्यायः ॥ ३२ ॥

# त्रयस्त्रिंशोऽध्यायः

## रथयात्रामहोत्सवविधिकथनम्

### जैमिनिरुवाच

तऊर्ध्वंप्रवक्ष्यामिमहावेदीमहोत्सवम् । अज्ञानतिमिरान्धोऽपि येनभास्वत्पदंव्रजेत्
ाखस्याऽमले पक्षे तृतीयापापनाशिनी । स्वयमाविष्कृताचैषाप्राजापत्यर्क्षसंयुता
थां संकल्प्य नृपतिराचार्यंवरयेच्छुचिः । एकं त्रीनथ तक्षाणं दृष्टकर्माणमादरात्
ुयाद्वनयागायवस्त्रालङ्करणादिभिः । तक्ष्णासार्द्धं वनं गत्वा साधुवृक्षगणाकुलम्
मध्ये वह्निमाधायमन्त्रराजेनमन्त्रवित् । अष्टोत्तरशतंहुत्वासम्पाताज्यविमिश्रितम्
ज्यं तरूणां मूलेतुप्रत्येकमभिघारयेत् । दिक्पालेभ्योबलिंदत्त्वाक्षेत्रपालपशूंस्तथा
स्पतये जुहुयात्क्षीरोदनशताहुतिम् । ततः परशुमादाय वृक्षमूलेषु दिक्षु वै ॥ ७ ॥

आज्यसंस्कृतिदेशेषु आचार्यो मन्त्रमुच्चरन् ।
किञ्चित्किञ्चिच्छेदयेद्वै चिन्तयन्गरुडध्वजम् ॥ ८ ॥

त्सु तूर्यघोषेषु गीतमङ्गलवादिषु । नियोज्य वर्द्धकिं तत्र आचार्यः स्वगृहं व्रजेत्
वास्थानलब्धानिदारूणिरथकर्मणि । उक्तसंस्कारविधिनासंस्कुर्यात्कल्पितेऽनले
मेत रथं कृत्वा विघ्नराजमहोत्सवम् । षोडशारैः षोडशभिश्चक्रैर्लोहमयैर्दृढैः ॥
विष्णो रथं कुर्याद्दृढाक्षं दृढकूबरम् । विचित्रघटनाकक्षपुत्तलीपरिवेष्टितम्
ाविचित्रबहुलमिक्षुखण्डविराजितम् । चतुस्तोरणसंयुक्तं चतुर्द्वारं सुशोभनम्
ाविचित्रबहुलं हेमपट्टविराजितम् । द्वाविंशतिकरोच्छायं पताकाभिरलङ्कृतम्
डं च ध्वजं कुर्याद्रक्तचन्दननिर्मितम् । दीर्घनासंस्थूलदेहंकुण्डलाभ्यांविभूषितम्
वग्रदष्टभुजगंसर्वालङ्कारभूषितम् । वितत्य पक्षतीव्योम्निउड्डीयन्तमिवोदितम्
दानवसङ्घस्य बलदर्पविनाशनम् । सर्वाङ्गं तस्य कनकैराच्छाद्य परिशोभयेत् ॥

रथमेवं हरेः कुर्यात्स्वासनं सुपरिष्कृतम् ।

चतुर्दशरथाङ्गैस्तं रथं कुर्याच्च सीरिणः॥ १८ ॥

चक्रैर्द्वादशभिःकुर्यात्सुभद्रायारथोत्तमम्। सप्तच्छदमयं कुर्यात्सीरिणोला...
देव्याः पद्मध्वजं कुर्यात्पद्मकाष्ठविनिर्मितम्। विरचय्य रथान्राजाप्रतिष्ठां पूर्व...
यथामन्त्रं यथाशास्त्रं विश्वसेद्ब्राह्मणेषु च। ब्राह्मणाजगदीशस्यजङ्गमास्तनवः...
इत्थं सुघटितं चक्रित्रयं देवत्रयस्यवै। आषाढस्य सिते पक्षे दिने विष्णोः...
प्रतिष्ठाप्य समृद्धेनविधिनापूर्ववद्द्विजाः। रक्षणीयांतथातत्र नाऽऽरोहेत्कश्चन...
पक्षी वा मानुषो वाऽपि मार्जारनकुलादयः। ततो दिनत्रयादर्वाग्रथानामुत्तमं...
मण्डपे उत्सवाङ्गे वाप्रकुर्यादङ्कुरार्पणम्। अद्भुतेष्वथ जातेषु शान्तिं कुर्यात्पुरो...
रथ्यासुसंस्कृताकार्यामहावेदींतथाव्रजेत्। पार्श्वयोर्मण्डलंकुर्यात्पथिगुल्मादि...
सुमनःस्तवकैर्माल्यैर्दुकूलैश्चामरैस्तथा। यथा सुपुष्पिताऽरण्यराजी तत्र वि...

भूमिः समा च कार्या वै निष्पङ्का सुखचारणा।
निर्मला च सुगन्धा च सुदूराद्धर्जितोत्करा॥ २८ ॥

धूपपात्राण्यनुपदं दिशांमोदकराणि च। चन्दनाम्भः परिक्षेपो यन्त्रपातोत्कि...
बहूनि ऋतुपुष्पाणि पुष्पवृष्ट्यर्थमेव हि। नटनर्त्तकमुख्याश्च गायना बहवः...
वेश्या यौवनगर्वाढ्या रूपाऽलङ्कारभूषिताः। मृदङ्गाः पणवाश्चैव भेरीढक्काः...
बहवो बहुधा तत्र पताकाश्चित्रितान्तराः। ध्वजाश्च बहवस्तत्र स्वर्णराजतनिपुञ्ज...
वैजयन्त्यो बहुविधाभूमिगावाहनास्तथा। हस्तिनश्चहयाश्चैवसुसन्नद्धाःस्वलङ्कृ...

एवं सम्भृतसम्भारः क्षितिपालः शुचिव्रतः।
मुदा भक्त्या च परया युक्तः कुर्यान्महोत्सवम्॥ ३४ ॥

आषाढस्य सिते पक्षे द्वितीयापुष्यसंयुता। अरुणोदयवेलायां तस्यां देवं...
ब्राह्मणैर्वैष्णवैः सार्द्धं यतिभिश्च तपस्विभिः। विज्ञापयेद्देवदेवंयात्रार्थंसंस्कृ...
इन्द्रद्युम्नंक्षितिभुजंयथाज्ञासीःपुराविभो। विजयस्वरथेनाऽथ गुण्डिचामण्ड...
तवापाङ्गविलोकेन प्रपुनन्तु दिशो दश। निःश्रेयसपदं यान्तु स्थावराणि जङ्ग...
अवतारः कृतो ह्येष लोकानुग्रहकाम्यया। तदेहि भगवन्प्रात्या चरणं न्यस्य...

ततः कर्पूरचूर्णैश्च सुमनोभिरवाकिरेत् । पथि शाकुनसूक्तानि प्रपठन्ति द्विजातयः ॥
केचिन्मङ्गलगाथाश्च केचिज्जयजयेति च । जितन्त इति मन्त्रं वै केचिदुच्चैर्जपन्तिच
सूतमागधमुख्याश्चकीर्तिपुण्यांमुदाजगुः । स्वर्णदण्डप्रकीर्णानांश्रेणीचोभयपार्श्वयोः
लीलयाऽऽन्दोलयन्तिस्मरमत्कङ्कणमञ्जुलम् । स्वर्णपात्रपरिक्षिप्तकृष्णागुरुसुधूपितैः
सुरभीकृतसर्वाशा मुखे व्योमाङ्गणे तथा । चर्चरीझर्झरीवेणीवीणामाधुरिकादयः ॥
शब्दायन्ते सुमधुरं गोविन्दविजयान्तरे ॥ ४४ ॥
एवं प्रवृत्ते समये कृष्णं रामपुरःसरम् । नयन्ति विप्रा भद्राश्चक्षत्रियाश्च विशस्तथा
छत्रमाला समुदिता मुक्तास्रक्चीनतोरणा । रत्नध्वजा हेमदण्डाः पार्श्वयोर्मुरवैरिणः
राजा चतुर्विधावर्णाअन्ये ये च पृथग्जनाः । दीना महान्तश्चतदा समानातत्रभान्तिवै
सलीलचरणन्यासंतूलिकास्तरणेषुतान् । वासयन्तःक्वचिच्छान्तादेवांस्तेरथमन्वियुः
महोत्सवंसमासाद्यगीतकोलाहलानि च । करे कृत्वा जगन्नाथं भ्रामयित्वारथोत्तमम्
रामं कृष्णं सुभद्रांच्च रथमध्ये निवेशयेत् । चारुचन्द्रातपाढ्येन मण्डपेन विराजिते
किङ्किणीमालिकाभिश्च माल्यचामरभूषिते । ससारकृष्णागुरुजधूपपूरितगर्भके ॥
ततस्तान्वासयित्वा तु तूलिकासु सुरोत्तमान् ।
भूषयेद्विविधैर्भक्त्या वस्त्रालङ्कारमाल्यकैः ॥ ५२ ॥
पूजयेदुपचारैस्तैः समृद्धैर्भक्तिभावितैः । नाऽतः परतरं विष्णोर्यात्रान्तरमवेक्ष्यते ॥
यत्र स्वयं त्रिलोकेशः स्यन्दनेन कुतूहलात् । मानयन्पूर्वमाज्ञां तां वर्षे वर्षे व्रजेदसौ
रथस्थितं व्रजन्तं तं महावेदीमहोत्सवे । ये पश्यन्ति मुदाभक्त्या वासस्तेषांहरेःपदे
सत्यं सत्यंपुनःसत्यंप्रतिजानेद्विजोत्तमाः । नातःश्रेयःपरंविष्णोरुत्सवःशास्त्रसम्मतः
यथारथविहारोऽयंमहावेदीमहोत्सवः । यत्राऽऽगत्यदिवोदेवाःस्वर्गंयान्त्यधिकारिणः
किं वच्मि तस्य माहात्म्यमुत्सवस्य मुरद्विषः ?।
यस्य संकीर्तनात्पापं नश्येज्जन्मशतोद्भवम् ॥ ५८ ॥
महावेदीं व्रजन्तं तं रथस्थं पुरुषोत्तमम् । बलभद्रं सुभद्रांश्च जन्मकोटिसमुद्भवम्
दृष्ट्वा पापं नाशयति नाऽत्रकार्याविचारणा । रथच्छायांसमाक्रम्य ब्रह्महत्यांव्यपोहति

तद्रेणुसंसक्तवपुस्त्रिविधां पापसंहतिम् । नाशयेत्स्वर्गगङ्गायां स्नानजं फलमा...
घनाम्बुवृष्टियोगेन रथमार्गे तु पङ्किले । दिव्यदृष्ट्याच कृष्णस्य समस्तमलहा...
तत्रयेप्रणिपातांस्तुकुर्वते वैष्णवोत्तमाः । अनादिव्यूढपङ्कांस्तेहित्वा मोक्षमवा...

गवां कोटिप्रदानस्य कन्यानामयुतस्य च ।
वाजिमेधसहस्रस्य फलम्प्राप्नोत्यसंशयः ॥ ६४ ॥

अनुगच्छन्तिकृष्णं ये यात्राकौतूहलादपि । अनुव्रजन्ति नित्यम्वै देवाःशक्रपुरो...
पश्यन्ति ये रथं यान्तं दारुब्रह्मसनातनम् । पदे पदेऽश्वमेधस्य फलं तेषां प्रकी...
वेदैःस्तुवन्तिवेदानांवक्तारोमोक्षदायिनम् । इतिहासपुराणाद्यैःस्तोत्रैर्वाऽपिस्व...
स्तुवन्तिपुण्डरीकाक्षंयेवै विगतकल्मषाः । वैष्णवंयोगमास्थाय मोदन्तेनारदा...
कुर्वन्ति वासुदेवाऽग्रेजयशब्देनवास्तुतिम् । ते वै जयन्तिपापानिविविधानिनि...
लयतालानभिज्ञोऽपि गीतमाधुर्यवर्जितः । नर्त्तनं कुरुते वाऽपि गायत्यथ न...

वैष्णवोत्तमसंसर्गान्मुक्तिं प्राप्नोत्यसंशयः ॥ ७० ॥

नामानि कीर्तयन्नस्य तेन याति सहैव यः । अनुव्रज्यात्तत्फलम्वै प्राप्नोत्यत्रन...

जय कृष्ण जय कृष्ण जय कृष्णेति यो वदेत् ।
गुण्डिचानगरं यान्तं कृष्णं भक्तिसमन्वितः ॥
न मातृगर्भवासस्य स च दुःखमवाप्नुयात् ॥ ७२ ॥

चामरैर्व्यजनैः पुष्पस्तबकैर्नीलचोलकैः । रथस्याऽग्रस्थितोयोवैवीजयेत्पुरु...
स वीज्यमानोऽप्सरोभिर्गन्धर्वैरुपशोभितः । अनुव्रजद्भिस्त्रिदशैर्महेन्द्रासनसं...
भुनक्तिभोगानतुलान्यावदाभूतसम्प्लवम् । तदन्तेच ब्रह्मलोकं प्राप्यमुक्तिमवा...
कृष्णस्य पुरतो ये वै पुष्पवृष्टिं प्रकुर्वते । ते वै मनोगतान्सर्वान्प्राप्नुवन्तिमनो...
सहस्रनामभिः पुण्यैः पर्यटन्ति रथं तु ये । तेषां प्रदक्षिणं कुर्युस्त्रिदशानत...

वसन्ति वैकुण्ठगृहे विष्णुतुल्यपराक्रमाः ॥ ७८ ॥

तस्मिन्काले महापुण्ये देवर्षिपितृसेविते । एकं ब्रह्म त्रिधाभूतं माययाऽनुगतं...

साक्षाद्दारुस्वरूपेण महावेदी महोत्सवम् ॥ ८० ॥

थारूढःकौतुकवान्यत्रयातिजगत्प्रभुः । तस्मिन्कालेपृथिव्यां तु चरेत्तत्रमहोत्सवम्
देवा अप्युत्सवेतस्मिन्पुरुहूतपुरोगमाः । अभिमानम्परित्यज्य श्रेणीभूताहिपार्श्वयोः
प्रकर्वते महायात्रां तैस्तैर्दिव्यैः परिच्छदैः ॥ ८३ ॥
तेषामग्रेसरस्तत्र देवोऽपि प्रपितामहः । चतुर्दशानां जगतां कर्ता यः परमेश्वरः ॥
सोऽपि तत्र जगन्नाथं रथेयान्तंमहोत्सवे । ब्रह्मलोकात्परावृत्य स्तुवन्वेदमयैःस्तवैः
पदे पदे प्रणमति भगवन्तं सनातनम् ॥ ८५ ॥
यद्यप्यब्जनिधेः कृष्णान्न भेदोऽस्ति तथाऽप्ययम् ।
महोत्सवस्य महिमा यत्र सर्वेऽनुयायिनः ॥ ८६ ॥
नाऽतः परतरो लोके महावेदीमहोत्सवात् । सर्वपापहरो योगः सर्वतीर्थफलप्रदः
कृष्णमुद्दिश्य यस्तत्र दानं ददति वैष्णवाः । यत्किञ्चिदक्षयफलं मेरुदानेन तत्समम्
तस्याऽग्रे देवदेवस्य व्रजतो गुण्डिचालयम् । यत्किञ्चित्कुरुते कर्म तत्तदक्षयमश्नुते
पायनानि नाना वै भक्ष्यभोज्यानिचैव हि । समर्पयन्तिदेवाय तत्प्रीत्यैवाद्विजन्मने
तेषामक्षयपुण्यानि सर्वकामप्रदानि च ॥ ९० ॥
हरेरग्रेसरा ये वै पश्यन्तस्तन्मुखाम्बुजम् । पदे पदे नमन्तश्च पङ्कधूलिपरिप्लुताः
विहाय पापकवचमभेद्यं कोटिजन्मभिः ।
क्षणान्मुक्तिफलम्प्राप्य यान्ति विष्णोः शुभालयम् ॥ ९२ ॥
सर्वक्रतूनां तीर्थानां दानानां यान्तिते फलम् । भगवद्भक्तिभावानांनातःपुण्यतमोमहः
एवं स भगवान्कृष्णः सुभद्रारामसङ्गतः । व्रजन्स्यन्दनश्रेष्ठस्थो द्योतयंश्च चतुर्दिशः
श्रीमदङ्गोपसृष्टेन मरुता सर्वदेहिनाम् । पापानि नाशयञ्छ्रीमान्दयालुर्भक्तभावनः
अज्ञानामप्यविश्वासभाजांविश्वासहेतवे । निसर्गमुक्तिदोऽप्येष यात्रारम्भान्करोतिवै
व्रजन्समृद्ध्या देवानांमर्त्यानां च जनार्दनः । सूर्ये ललाटंतपति मध्याह्ने मार्गमध्यतः
श्रान्ता कर्षजनस्तस्थौ म्लायन्वैतद्रजोवृतः । तत्रातपस्यशान्त्यर्थंदर्पणेष्वभिषेचयेत्
पञ्चामृतैः शीततोयैः पुष्पकर्पूरवासितैः । चामरैश्च जलार्द्रान्तैः शीतलैर्व्यजनैस्तथा
वीजयेत्पुण्डरीकाक्षं सुभद्रां राममेव च । शीतैश्च पानकै[illegible]विकारकैः

खजूरैर्नारिकेलैश्च नानारम्भाफलैस्तथा । तथा क्षीरविकारैश्च पनसैस्तृणरा
इक्षुभिः स्वादुहृद्यैश्च फलैर्नानाविधैस्तथा । वासितैः शीततोयैश्च पक्वताम्बू
सकर्पूरलवङ्गाद्यैः पूजयेत्पुरुषोत्तमम् ॥ १०३ ॥
तस्मिन्काले द्विजश्रेष्ठा ये पश्यन्ति जनार्दनम् । पूजयन्ति यथाशक्ति न ते संसार
प्राप्नुवन्ति द्विजश्रेष्ठा ब्रह्मलोकनिवासिनः ॥ १०५ ॥
रथत्रयस्थितं देवत्रयं ये पुरुषर्षभाः । प्रदक्षिणं प्रकुर्वन्ति त्रिश्चतुः सप्त
दशप्रणामान्कृत्वाऽन्ते स्थिताः प्राञ्जलयोऽग्रतः ।
पुरा रथस्थितान्ब्रह्मा स्तुतिभिर्याभिरब्जभूः ॥ १०७ ॥
तुष्टाव ताभिर्देवेशं स्तुवन्ति परमेश्वरम् । ये नरा ब्रह्मलोकं ते प्रयान्ति निय
ततोऽपराह्णे देवेशं दक्षिणानिलवीजितम् । शनैः शनैर्नयेद्गीतैर्वेणुवीणादि
वन्दिनः स्तुतिपाठैश्च कलैर्मधुरिकास्वनैः । निरन्तरैः पुष्पवर्षैश्चामरान्दोल
एवं व्रजति देवेशे सूर्यश्चास्तंगतो भवेत् । दीपिकानां सहस्राणि ज्वालिता
तदालोकप्रकाशेन मार्गशेषश्च नीयते । रथावरोहणेनैषां मण्डपारोहणेन
सम्मर्दः सुमहांस्तत्र दिदृक्षूणां कुतूहलात् । मण्डपे वासयेद्देवं गुण्डिचाख्ये
चारुचन्द्रातपे चारुमाल्यचामरभूषिते । रत्नस्तम्भमये स्वर्णवेदिकोपस्क
प्राचीरवलयावीते सुधालेपसमुज्ज्वले । साधुसोपानघटिते चतुर्द्वारोप
त्रैलोक्याडम्बरयुते महावेद्यां महाक्रतोः । प्रादुर्भावो महेशस्य यत्राऽभूद्
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये
खण्डान्तर्गतोत्कलखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसम्वादे
गुण्डिचायात्राकथनंनाम त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

# चतुस्त्रिंशोऽध्यायः

## रथयात्रामहोत्सवप्रशंसातत्रश्राद्धविधिवर्णनम्

जैमिनिरुवाच

श्वमेधाङ्गसरसो नृसिंहस्य च दक्षिणे। तत्राऽऽसीनश्च भगवान्पुनश्चावतरन्निव

बभासे दिव्यरूपोऽसौ दुर्विभाव्यः सुरासुरैः।

तदा पूजोपहारैश्च भक्ष्यभोज्यादिकैस्तथा ॥ २ ॥

जयित्वा जगन्नाथं तोषयेद्गीतनृत्यकैः। पुष्पोपहारैर्विविधैः सुगन्धैरनुलेपनैः॥

ष्णागुरुजधूपैश्च गन्धतैलप्रदीपकैः। तोषयेज्जगतां नाथमनेकैरुपहारकैः ॥ ४ ॥

न्दुतीर्थतटे तस्मिन्सप्ताहानिजनार्दनः। तिष्ठेत्पुरा स्वयं राज्ञे वरमेतत्समादिशत्

त्वत्तीर्थतीरे राजेन्द्र! स्थास्यामि प्रतिवत्सरम्।

सर्वतीर्थानि तस्मिंश्च स्थास्यन्ति मयि तिष्ठति ॥ ६ ॥

त्रस्नात्वाविधानेनतीर्थेतीर्थौघपावने। सप्ताहं ये प्रपश्यन्ति गुण्डिचामण्डपेस्थितम्

ां च रामं सुभद्रां च मत्सायुज्यमवाप्नुयुः। ततस्तस्मिन्महापुण्ये सर्वपापप्रणाशने

र्वतीर्थैकफलदविष्णुप्रीतिकरे शुभे। स्नात्वा सन्तर्प्य विधिवत्पितॄन्देवानतन्द्रितः

स्थं नरसिंहं तं पूजयित्वा प्रणम्य च। महावेदीं नरो गत्वा कृताशौचाचमक्रियः

जयेत्पूर्ववद्विप्राः प्रणमेद्वापि भक्तितः। सप्ताहं यो नरो नारी न सा प्राकृतमानुषी

ष्णुसायुज्यमाप्नोति शासनान्मुरवैरिणः। दिवातद्दर्शनं पुण्यं रात्रौ दशगुणंभवेत्

यत्किञ्चित्क्रियते कर्म सन्निधौ जगदीशितुः।

स्वल्पंवाप्यथवा भूरि कोटिकोटिगुणं भवेत् ॥ १२ ॥

लापुरुषदानानि महादानानि यो ददेत्। एके प्रदत्ते दानेऽपि सर्वं दत्तं भवेद् द्विजाः

वं मेरुसमं दानं सर्वं व्याससमाद्विजाः। महावेद्यां गते कृष्णे योगोऽयंखलुदुर्लभः



अर्द्धोदयादिका योगाः स्कन्दन परिमाणिताः।

महावेद्याख्ययोगस्य कलो नार्हन्ति षोडशीम् ॥ १६ ॥
अतःपरं प्रवक्ष्यामि पितृणां कार्यमुत्तमम् । यावज्जीवंगयाश्राद्धैरलभ्यमुक्ति
दिविस्था नरकस्था वा तिर्यग्योनिगतास्तथा ।
तथा मनुष्यजातिस्थाः सर्वे पितृपितामहाः ॥ १८ ॥
शतं पुरुषविख्याता यं वाञ्छति सुतैः कृतम् ।
तं वो विधिं प्रवक्ष्यामि शृणुध्वं मुनयो वरम् ॥ १६ ॥
मघा वै पितृनक्षत्रं पितृणां प्रीतिदं परम् । तत्र श्राद्धं तु प्रीणातिदत्तंपुत्रैर्मुद
पञ्चमीचतिथिःश्रेष्ठाश्राद्धेऽभ्युदयकारिणी । उभयोर्यदिसंयोगोमहापुण्यतम
यस्यां श्राद्धे कृतेपुत्रैःपितृणामुद्धृतिर्भवेत् । सर्वतीर्थमयेतस्मिन्सन्निधौमु
श्राद्धं चेच्छ्रद्धया कुर्यान्नीलकण्ठनृसिंहयोः । मध्ये मेध्यतमे देशे योगे पञ्च
पुरुषाञ्छतमुद्धृत्य ब्रह्मलोके महीयते । प्रशस्यः कुतपः कालो मन्दीभूता
पितृनुद्दिश्य वा दद्यादशक्तः कनकं शुचिः ।
तर्पयित्वा तिलैः सम्यक्पैतृकीं प्रीति मुत्तमाम् ॥ २५ ॥
अथवा भोजयेद्विप्रान्भोज्यमूल्यानि वा ददेत् । एकस्मै वा गुणवतेसहस्रंभो
गुणागुणविवेकस्तुनाऽत्रयोगे विधीयते । तस्मिन्सुदुर्लभे योगेसर्वेमुनिस
आषाढस्य सिते पक्षे पञ्चमी पितृदैवतम् । नक्षत्रं जगदीशस्य महावेदीस
एते यदा त्रयः स्युश्चेदिन्द्रद्युम्नसरोवरे । चतुष्पादः स्मृतो योगः पितृणा
पितृकार्ये न सीदन्ति निरूप्य श्राद्धमत्र वै । शृणुध्वमन्यद्विप्रा वैप्रसङ्गा
नभस्यदर्शे यः कुर्याच्चतुर्ष्वपि युगादिषु । श्राद्धं पितृन्समुद्दिश्याऽश्वमेधा
गयाश्राद्धसहस्रस्य श्रद्धया विहितस्य वै । फलं यद्विसमंत्वस्यनात्रकार्या
दानं होमो जपश्चापि सर्वपापापनोदनः । दिनानि सप्त यान्यत्र कृष्णे वर्ष
एकस्मादुत्तरं श्रेयो यत्तस्मादुत्तरोत्तरम् ।
आषाढशुक्लतृतीयायां प्रातः स्नानं समाचरेत् ॥ ३४ ॥

इन्द्रद्युम्नतटे देशे नृसिंहक्षेत्र उत्तमे । व्रतमेतत्तु गृह्णीयात्सङ्कल्प्य विधिवत्

वनजागरणं नाम भगवत्प्रीतिवर्द्धनम् । सर्वपापप्रशमनं सर्वव्रतफलप्रदम् ॥ ३६ ॥
दिनानि सप्त मौनीस्यात्कृतत्रिश्रवणक्रियः । कुम्भेचपूजयेद्देवंत्रिसन्ध्यंभक्तिभावितः
गोघृतेनाऽथ तैलेन तिलजेनपप्रदीपयेत् । अहर्निशं हरेरग्रे रक्षेत्तं यत्नतो व्रती ॥ ३८ ॥

दिवा दिवा वसेन्मौनी रात्रौ रात्रौ च जागृयात् ।
मन्त्रं भागवतं जप्यान्नित्यकृत्यान्तरे व्रती ॥ ३६ ॥

उपवासपरो भूत्वा सप्ताहानि नयेद्व्रती । अष्टमे प्रातरुत्थाय प्रतिष्ठां कारयेद्दिने ॥
तस्मिन्नेवतीर्थवरेस्नात्वाऽऽगत्यगृहं पुनः । मण्डले सर्वतोभद्रे पूर्वे कुम्भं निवेशयेत्
तत्राऽऽवाह्यहृषीकेशंपूजयेदुपचारकैः । तस्य पश्चिमदेशे च स्थण्डिले विधिसंस्कृते
अग्निं प्रणीय गृह्योक्तविधिना ब्राह्मणावृतः । अग्निकार्यंप्रकुर्वीतसमिदाज्यचरूंस्तथा

सहस्रं जुहुयादग्नौ प्रत्येकं वा शतं शतम् ।
गायत्री वैष्णवी या वै तया होमविधिः स्मृतः ॥ ४४ ॥

सम्प्राश्यदक्षिणांदद्याद्धेनुंवस्त्रंहिरण्यकम् । विप्रांश्चभोजयेदन्तेप्रीतयेविश्वसाक्षिणः
व्रतराजमिमं कृत्वाविधिनाऽनेन भोद्विजाः । चतुर्वर्गानवाप्नोतियोयःकामानभीप्सति

नारी वा श्रद्धया युक्ता कुर्याद्वेदीमहोत्सवम् ।
साऽपि तत्फलमाप्नोति या कुर्याद्व्रतमुत्तमम् ॥ ४७ ॥

यात्राकर्तुः फलं यादृग्व्रतकर्तुश्च तत्फलम् । भवतेवैद्विजश्रेष्ठाःकथितंवोमुदान्विताः

इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णव-
खण्डान्तर्गतोत्कलखण्डेपुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनऋषिसम्वादे
रथयात्रामहोत्सवप्रशंसानामचतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

# पञ्चत्रिंशोऽध्यायः

## भगवतोरथरक्षाविधानवर्णनम्

### जैमिनिरुवाच

अतः परं प्रवक्ष्यामि रथरक्षाकरं विधिम् । भूतप्रेतादयो घोरा दारुणात्यु
न वाधन्ते रथान्येन मुनयो यश्चयन्मतम् । प्रत्यहं पूजयेद्देवान्कृष्णादीन्ध्वज
गन्धपुष्पाक्षतैर्माल्यैरुपहारैरनुत्तमैः । गीतनृत्तादिकैश्चैव धूपदीपनिवेदनैः ।
दिक्पालेभ्योवलिंदद्यात्पायसान्नेनचान्वहम् । भूतप्रेतपिशाचेभ्योदद्याच्चवलि
रक्षेच्च यत्नतस्तान्वै रथानारोहणोचितान् । यथा न कश्चिदारोहेन्नरो ग्राम्य
पक्षिणश्च विशेषेण येषां वासो न शोभनः ॥ ५ ॥
अष्टमेऽह्नि पुनः कृत्वा दक्षिणाभिमुखान्रथान् । विभूषयेद्वस्त्रमाल्यपताकैश्चाम
नवम्यां वासयेद्देवांस्तेषु प्रातः समृद्धिमत् ॥ ७ ॥
दक्षिणाभिमुखा यात्राविष्णोरेषा सुदुर्लभा । यात्राप्रयत्नतःसाहिभक्तिश्रद्धा
यथापूर्वा तथा चेयं द्वे च मुक्तिप्रदायिके । यात्राप्रवेशौ देवस्य एक एवो
पुराविदो वदन्त्येतां यात्रांनवदिनात्मिकाम् । एषात्र्यवयवायात्रासम्पूर्णाये
सुसम्पूर्णफलस्तेषां महावेदीमहोत्सवः ॥ ११ ॥
गुण्डिचामण्डपात्कृष्णमायान्तं दक्षिणामुखम् ।
रथस्थं बलिनं भद्रां पश्यन्तो मुक्तिभागिनः ॥ १२ ॥
उत्तराभिमुखान्दृष्ट्वालभन्तेयादृशंफलम् । रामादीन्स्यन्दनस्थान्येपश्यन्त्येवं
यादृशं फलमाप्नुयुस्तादृशं दक्षिणामुखान् ॥ १३ ॥
पदा यान्तं रथे यान्तं यःपश्येद्दक्षिणामुखम् । तस्य जन्मकृतार्थंस्याद्वाग्भिः
स्तुतिभिः प्रणिपातैश्च पुष्पवृष्टिभिरेव च । नानानृत्तोपहारैश्च व्यजनच्छत्र
उपायनैर्बहुविधैरुपतिष्ठेद्रथाग्रतः ॥ १५ ॥
नीलाचलं समायान्तं रथस्थं दक्षिणामुखम् । येपश्यन्तिहृषीकेशंसुभद्रांबल

ामकल्पतरुं पुंसां दर्शनादेव मुक्तिदम्। ते व्रजन्ति महात्मानो वैकुण्ठभवनं हरेः
थेन विचरन्तं तं सिन्धुतीरे जनार्दनम्। पश्यन्तं करुणापाङ्गैः प्रणतान्पुरतो नरान्॥
क्षिणाभिमुखं यान्तं प्रासादं नीलभूधरे। सर्वतीर्थनिधिं सर्वदानकल्पतरुं हरिम्॥
तुवन्तः प्रणमन्तश्च श्रद्दधानाश्च ये नराः। न तेपुनरिहायान्तिब्रह्मलोकस्थिताध्रुवम्
नयः कथितो वोऽयं महावेदीमहोत्सवः। यस्य सङ्कीर्त्तनादेव निर्मलो जायतेनरः
श्चेदं कीर्तयेन्नित्यं प्रातरुत्थाय मानवः। शृणुयादपि वुद्धिस्थः शक्रलोकं व्रजेदसौ
त्यर्चारूपमपि वा रथमास्थाप्य योहरेः। कुर्याद्यात्रामिमां श्रद्धाभक्तिभावेनमानवः

सोऽपि विष्णोः प्रसादेन गुण्डिचोत्सवजं फलम्।
प्राप्य वैकुण्ठभवनं याति नाऽत्र विचारणा॥ २४॥

यश्रीर्यावतीविप्राभक्तिर्वाश्रद्धयान्विता। तावतीयंमहायात्रायो यथाकर्तुमिच्छति
ं पवित्रं परमं रहस्यं वेधसोदितम्। कारयित्वाऽथवा दृष्ट्वा यन्नरोनाऽवसीदति
ति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डा-
न्तर्गतोत्कलखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसम्वादे
नवाह्निकयात्रायांरथरक्षाविधानंनामपञ्चत्रिंशोऽध्यायः॥ ३५॥

---

## षट्त्रिंशोऽध्यायः

### भगवताःशयनोत्सवविधिवर्णनम्

जैमिनिरुवाच

ः परम्प्रवक्ष्यामिशयनोत्सवमुत्तमम्। आषाढीमवधिं कृत्वा हरेः स्वापस्तुकर्कटे
वार्षिकांश्चतुरो मासान्यावत्स्यात्कार्त्तिकी द्विजाः!।
अयं पुण्यतमः कालो हरेराराधनम्प्रति॥ २॥

स्यां वहुयुगं वासान्नियमव्रतसंस्थितेः। फलं यदुक्तं तद्विद्यात्क्षेत्रे श्रीपुरुषोत्तमे

चातुर्मास्यदिनैकेन वसतःसन्निधौः हरेः। वार्षिकाणांचतुर्णां तु यान्यहानि
पुण्यक्षेत्रे जगन्नाथसन्निधौ निर्मलान्तरे। प्रत्यक्षं वाजिमेधस्य सहस्रस्य
स्नात्वा सिन्धुजले पुण्ये दृष्ट्वा श्रीपुरुषोत्तमम्। चातुर्मास्यव्रतेतिष्ठन्नशोच
चातुर्मास्ये निवसति क्षेत्रेश्रीपुरुषोत्तमे। साक्षाद्दृष्टिर्भगवतस्तद्द्वयं मुक्ति

तस्मात्सर्वाणि सन्त्यज्य श्रौतस्मार्त्तानि मानवः।
प्रयत्नान्निवसेत्पुण्ये क्षेत्रे श्रीपुरुषोत्तमे ॥ ८ ॥

भोगिभोगासने सुप्तश्चातुर्मास्येषु वै प्रभुः। सर्वक्षेत्रेषुसान्निध्यंनकरोति
अत्र साक्षान्निवसति यथा वैकुण्ठवेश्मनि। द्वादशस्वपि मासेषु भगवान
मुक्तिदश्चक्षुषा दृष्टश्चातुर्मास्ये विशेषतः। अष्टमासनिवासेन दृष्ट्वा विष्णुं
यदाप्नोति फलं तद्धि चातुर्मास्यदिनैकतः। चातुर्मास्यनिवासेन क्षेत्रे श्री
दिनं दिनं महापुण्यं सर्वक्षेत्रनिवासजम्। फलं ददाति भगवान्क्षेत्रे वर्षा
सर्वपापप्रसक्तोऽपि सर्वाऽऽचारच्युतोऽपि च। सर्वधर्मबहिर्भूतो निवसे
चातुर्मास्यमथैकं यः कुर्याद्वै पापकृन्नरः। विहाय सर्वपापानि बहिरन्त

नरसिंहप्रसादेन वैकुण्ठभवनं व्रजेत् ॥ १५ ॥

तस्मान्नरः सर्वभावैर्विष्णोःशयनभावितान्। वार्षिकांश्चतुरोमासान्निवसे

कुर्यादन्यत्र वा कुर्याज्जन्मसाफल्यमृच्छति ॥ १७ ॥

आषाढशुक्लैकादश्यां कुर्यात्स्वापमहोत्सवम्। मण्डपं रचयेत्तत्र शयना
देवस्य पुरतःशय्यांरत्नपल्यङ्किकोपरि। स्वास्तीर्यसोपधानांतु मृदुचीना
कर्पूरधूलिविक्षिप्तांसाधुचन्द्रातपांशुभाम्। सर्वतोवेष्टितांछिद्ररहितां

साधुद्वारां समां स्निग्धां नानाचित्रोपशोभिताम्।
एकं स्वापगृहं कृत्वा निशीथे प्रतिमात्रयम् ॥ २१ ॥

सौवर्णं राजतं वाऽपि रीतिजं दार्वदंतथा। यथाश्रद्धं प्रकुर्वीत प्रशस्तं
तत्त्रयाणां सुराणास्वैपादमूले यथातथम्। निधाय पूजयेद्देवांस्त
पूजान्ते भावयेदैक्यं तेषां [illegible] सर्वलो

पापार्थं चतुरो मासान्सर्वकल्याणवृद्धये । इतिसम्प्रार्थ्यदेवेशांस्तदंगात्तत्सजांत्रयम्
प्रत्यर्चांसु विनिक्षिप्य माङ्गल्यस्तुतिगीतिभिः ।
नयेच्छय्यागृहद्वारं वासयेद्घटिकात्रये ॥ २६ ॥
अमृतैः स्नापयेत्तान्पृथक्पलशताधिकैः । सुगन्ध चन्दनैर्लिप्तान्वस्त्राऽलङ्करणादिभिः
जयित्वा यथान्यायं प्राञ्जलिर्मन्त्रमुच्चरेत् । जगद्वन्द्य! जगन्नाथ! जगत्त्राणपरायण!
हितायजगतामीश चातुर्मास्यान्घनागमान् । सुप्त्वाप्रशमयाऽरिष्टाञ्छक्रेणसहपूजितः
एहि शयनागारं सुखमत्र स्वप प्रभो !। इति सम्प्रार्थ्य देवेशं स्वापयेत्पुरुषोत्तमम्
दृढंबन्धयेद्द्वारं विष्णोः शयनवेश्मनः । स्वापयित्वाजगन्नाथं लभते सुखमुत्तमम्
र्षिकांश्चतुरोमासान्प्रसुप्ते वै जनार्दने । व्रतैरनेकैर्नियमैर्मासान्वै चतुरः क्षिपेत् ॥३२
कल्पस्थायीविष्णुलोकेनरोभक्तोभवेद्ध्रुवम् । नियमव्रतानि गदतःशृणुध्वंमुनयो मम
खट्वादिशयनं वर्जयेभक्तिमान्नरः । अनृतौ न व्रजेद्भार्यां मासं मधु परौदनम् ॥
तैलं मूलकं चैव वार्त्ताकं च न भक्षयेत् । अभक्ष्यंवर्जयेद्दूरान्मसूरं सितसर्षपम्
राजमाषान्कुलत्थांश्च आशुधान्यं च सन्त्यजेत् ।
शाकं दधि पयो माषाञ्छ्रावणादौ क्रमादिमान् ॥ ३६ ॥
जगोपयतींस्त्यक्त्वा नाऽऽरोहेच्चर्मपादुके । वार्षिकांश्चतुरो मासानव्रतेन नयेद्यदि
तस्य पापस्य शान्त्यर्थं कार्तिके वा व्रती भवेत् ॥ ३७ ॥
ः कृष्णाय हरये केशवाय नमोनमः । नमोऽस्तु नारसिंहाय विष्णवे पापजिष्णवे
सायम्प्रातर्दिवामध्ये कर्मान्तेषु च योजयेत् ॥ ३६ ॥
स्य पापानि घोराणि चितानिबहुजन्मसु । निर्दहत्येव सर्वाणितूलराशिमिवानलः
काहारोयताहारोविष्णुनिर्माल्यभोजनः । आषाढीमवधिंकृत्वाकार्तिक्यवधियोभवेत्
नक्तभोजी भवेद्वाऽपि स्वर्गस्तस्याऽल्पकं फलम् ॥ ४१ ॥
अभ्यङ्गं दिवास्वापंमृषावादश्चवर्जयेत् । आषाढशुक्लैकादश्यांसंक्रान्तौकर्कटस्यवा
पौर्णमास्यां वा नरो भक्त्या गृह्णीयान्नियमव्रती । सर्वपापहरं देवं प्रपूज्य मधुसूदनम्
अग्रे प्रतिसङ्कल्प्य व्रतार्चनजपादिकम् । प्रार्थयेत्परमानन्द कृताञ्जलिपुटो व्रती ॥

चातुर्मास्यव्रतं देव गृहीतं त्वत्प्रसादतः । तव प्रसादान्निर्विघ्नं सिद्धिमायातु
व्रतेऽस्मिन्नद्यसम्पूर्णे परलोकगतिर्भवेत् । तन्मे भवतु सम्पूर्णं त्वत्प्रसादा
इति सम्प्रार्थ्य देवेशं पूर्वोक्तनियमस्थितः । प्रापयेच्चतुरोमासान्विष्ण्वर्पितम
पारणं प्रतिमासान्ते प्रीत्यै कृष्णस्य कारयेत् ॥ ४८ ॥
मिष्टान्नैर्भोजयेद्विप्रान्पूजयित्वा जगत्पतिम् ।
असमर्थस्तु कार्तिक्यां पारयेद्व्रतमुत्तमम् ॥ ४९ ॥
तस्यां पूज्यंजगन्नाथंवह्निस्थंतर्पयेत्ततः । द्विजाग्र्यान्पायसैर्मिष्टैर्विष्णुभक्त्या
यथाशक्त्या प्रदद्याद्वै कनकं वस्त्रमेव च । अशक्तः कार्तिके मासि व्रतंकुर्यात्तु
व्रतं च विविधं विष्णोः कृच्छ्रचान्द्रायणं तथा ॥ ५२ ॥
[एकान्तरंद्वान्तरंवाकुर्यान्मासोपवासकम् । अनोदनं फलाहारं नक्तव्रतमथा
यवगोधूमकं कुर्यात्पराकम्वाव्रतं द्विजाः ॥ ]
पयःपीत्वानयेद्यस्तुशाकाहारेणवापुनः । भुक्त्वाऽत्रविपुलान्भोगान्परंनिर्वाण
तत्राऽपि चेदशक्तः स्याद्भीष्मपञ्चकमुत्तमम् । प्रीतये देवदेवस्य वन्यवृत्ति
एतद्व्रतं समाख्यातं भगवत्प्रीतिकारकम् । सर्वपापप्रशमनं विष्णुलोकगति
धन्यं यशस्यमायुष्यं सर्वकामप्रसाधनम् ( प्रसादनम् )॥ ५५ ॥
मुनयः प्रोक्तमेतद्वो रहस्यं शृणुताऽपरम् । एतद्व्रतम्वा चान्यानिव्रतानि सु
भगवद्भक्तिहीनानां जानीध्वं विफलानि वै । फलं महाक्रतूनांयत्तीर्थानां फल
दानानां तपसांचैवसात्त्विकानांचयत्फलम् । एकयाविष्णुभक्त्यातत्समग्रं फल
ये पश्यन्तिमहात्मानः शयनोत्सवमुत्तमम् । मातुर्गर्भे न स्वपन्तिकार्यन्ति
उत्सवान्ते व्रतं चेदं प्रतिज्ञाय तदग्रतः । पर्याप्तं पारयित्वा तु ब्रह्मलोके म
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वै
खण्डान्तर्गतोत्कलखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसम्वादे
भगवतःशयनोत्सवविधिवर्णनंनामषट्त्रिंशोऽध्यायः ॥ ३६ ॥

# सप्तत्रिंशोऽध्यायः

## दक्षिणायनसङ्क्रान्तिकृत्यवर्णनमुखेनश्वेतमाधवोपाख्यानवर्णनम्

जैमिनिरुवाच

ः परं प्रवक्ष्यामि दक्षिणायनमुत्तमम् । सङ्क्रान्तेः पूर्वकालेयाकला वै विंशतिर्मताः
यनं पुण्यकालोऽयं पुण्यकर्म सुकर्मिणाम् । पञ्चामृतैस्तत्रदेवंस्नापयेत्स्वापवद्द्विजाः
र्वाङ्गं लेपयेदस्यागुरुकर्पूरचन्दनैः । सुगन्धमाल्यालङ्कारैश्चारुवस्त्रैश्च दीपकैः ॥ ३ ॥
नाभक्ष्योपहारैश्च पूजयेत्परमेश्वरम् । कर्पूरालतिकामुच्चैर्मुखाभ्याशे हरेर्ददेत् ॥ ४
र्वाङ्कुराक्षतैर्नीराजनेनाऽथप्रनन्दयेत् । माङ्गल्यगीतनृत्ताद्यैर्नारी हुलुहुलां वदेत् ॥ ५
जितं पूज्यमानं च यः पश्येत्पुरुषोत्तमम् । पूजाशतगुणं पुण्यं तस्मै दद्याज्जनार्दनः
यने दक्षिणे तस्मिन्नर्च्यमानंश्रियःपतिम् । विहायसर्वपापानिविष्णुलोकंव्रजन्तिते

स्वल्पा वा महती यात्रा सर्वा मुक्तिप्रदा हरेः ।
तस्मिंस्तस्मिन्दिने दृष्टो भगवान्मुक्तिदो ध्रुवम् ॥ ८ ॥
विश्वासहेतोर्मूर्खाणां यात्रा ह्येताः कृपावता ।
विष्णुना कथिता विप्राः! पापिनां किल्बिषापहाः ॥ ९ ॥

यासजनितं पुण्यं मन्यन्ते ये नराधमाः । लक्ष्मीपतेर्भोजनायसंस्कार्योऽत्रमहानसः
णवाग्निं समाधाय निरूप्य चरुमुत्तमम् । वैश्वदेवं प्रकुर्वीत भगवत्पाकसाधनम्
गे वास्तुपतये प्रजानाम्पतये तथा । विष्णवेविश्वकर्त्रे चशुच्यग्नौजुहुयाच्छुचिः
ा नियुक्त आचार्यःश्रौतस्मार्तक्रियापरः । द्वारपालप्रचण्डाभ्यामैशान्यांक्षेत्रपालिने
क्षिणे च विरूपाय खगानाम्पतयेतथा । दुर्गासरस्वतीभ्यांचनैर्ऋत्यांविनिवेदयेत्

महालक्ष्मीमहेन्द्राभ्यां प्राच्यां दिशि बलिः स्मृतः ।
विष्णुपारिषदेभ्योऽथ पशूनाम्पतये तथा ॥ १५ ॥

ीच्यां बलिदानंतुनारदायाऽथपश्चिमे । आग्नेय्यामग्नयेदद्याद्वायव्यांविश्वसाक्षिणे

पञ्चश्वसनरूपेभ्यो विश्वकर्त्रेऽथ मध्यतः। आद्यन्तयोर्जलं दद्यात्प्रत्येकं बलिभावतः
दत्त्वा बलिं तदग्नौ तु कारयेत्पाकमुत्तमम्। सन्ध्यात्रये भगवतःपूजायैचरुका
चरुसंस्कारकाङ्गानिभक्ष्यभोज्यादिकानि वै। न दीतान्योजयेत्तत्रलोकेत्रैवर्णिकं
आर्यान्पवित्राञ्छूद्रान्वा वर्णांश्च परिसेवकान्।
लौकिकव्यवहारोऽयं पचति श्रीःस्वयं ध्रुवम्॥ २०॥
भुङ्क्ते नारायणो नित्यं तयापक्वंशरीरवान्। अमृतंतद्धिनैवेद्यंपापघ्नंमूर्ध्नि निवे
भक्षणान्मद्यपानादिमहादुरितनाशनम्। आघ्राणान्मानसं पापं दर्शनाद्दृष्टिजं
आस्वादात्तु कृतं पापं श्रावणंचव्यपोहति। स्पर्शनात्त्वक्कृतंपापंमिथ्याभाष
गात्रलेपाद्दहेत्पापं शारीरं वै न संशयः॥ २४॥
महापवित्रं हि हरेर्निवेदितं नियोजयेद्यः पितृदेवकर्मसु।
तृप्यन्ति तस्मै पितरः सुरास्तथा प्रयान्ति लोकं मधुसूदनस्य ते।
नातःपवित्रंवस्त्वस्तिहव्यकव्येषुभोद्विजाः। नराणांरूपमस्थायतदश्नन्तिदिवि
अभिमानो महांस्तत्र देवदेवस्य चक्रिणः। श्वेतोनाम महाराजः पुरात्रेतायुगे
व्रतस्थोऽपि महाभक्तिं चकार पुरुषोत्तमे। इन्द्रद्युम्नेन रचितभोगमात्रानुसा
भोगान्प्रकल्पयामासप्रत्यहंश्रीपतेर्मुदा। भक्ष्यभोज्यान्यनेकानिषड्रसांश्चसुसं
माल्यानिचविचित्राणिसुगन्धमनुलेपनम्। गीतवादित्रनृत्यानि दिव्यानिसु
राजोपचारा बहुशोऽवसरेऽवसरे हरेः। बहुवित्तव्ययायासभक्तिभावनिरूप
तत्तद्गुणवशाच्छास्त्रोक्तचित्रभोगाःपृथग्विधाः। कल्पितास्तेनभूपेनविद्वत्पङ्क्ति
प्रातः पूजनवेलायां हरिं द्रष्टुं जगाम सः। कस्मिंश्चिद्दिवसेराजापूज्यमानं
प्रणम्य देवदेवं तु बद्धाञ्जलिपुटोमुदा। प्रासादद्वारनिकटे तस्थिवान्प्रप
दृष्ट्वा स्वयंविरचितानुपचारानुत्तमान्। उपायनसहस्रं च हरेरग्रे प्रकल्पित
चिन्तयामास मनसा किञ्चिद्ध्यानावलम्बितः।
मनुष्यकल्पितं भोगं ग्रहीष्यति हरिः किमु॥ ३६॥
देवैर्दिव्योपचारैर्यो शक्यतेनाऽर्चनाविधौ। मानसैरुपहारैर्यं पूजयन्ति यतव्रता

भावदुष्टो बहिर्यागो नमुदे तस्य निश्चितम् । इत्थंसञ्चिन्तयन्राजादिव्यासनगतंविभुम्
भुञ्जानमन्नपानाढ्यं श्रिया सुपरिवेषितम् । दिव्यस्रग्जालङ्कृतयादिव्यगन्धदुकूलया
नर्घ्यरत्नमञ्जीरसिञ्जितेन सुरालयम् ।पूरयन्त्यास्वर्णदर्व्या ददत्या सादरं रसान् ॥
भगवत्प्रतिरूपैश्च भुञ्जानैः परिवेष्टितम् । दृष्ट्वा कृतार्थमात्मानं मन्यमानस्तदद्भुतम्
प्रोन्मीलिताक्षः स पुनःप्राग्दृष्टंसमवैक्षत । अतःप्रभृतिराजाऽसौपरांनिर्वृतिमाप्तवान्
निवेदिताशीर्व्रतवांश्चचार सुमहत्तपः । अकालमृत्युनाशाय स्वराज्ये मृतमुक्तये ॥
मन्त्रराजं जपन्नित्यं श्रितानां कल्पपादपम् । ददर्श शतवर्षान्ते नृहरिं दुरितापहम्

योगासनाब्जनिलयं वामाङ्कावस्थितश्रियम् ।
दिव्यालङ्कृतसर्वाङ्गं स्फटिकामलविग्रहम् ॥ ४५ ॥

त्रिदशैःसिद्धमुक्तैश्च स्तूयमानंस्मिताननम् । भ्रान्तोविस्मयभीतिभ्यांहर्षगद्गदयागिरा

प्रसीद नाथेति लपन्पपात धरणीतले ॥ ४६ ॥

पः कृशं तं प्रणतं दृष्ट्वा मनुजकेसरी । अकल्मषं क्षितिपतिं विवक्षुर्भक्तवत्सलः ॥

श्रीभगवानुवाच

त्तिष्ठवत्स! भक्तयातेप्रसन्नंविद्धिमांप्रभुम् । मयि प्रसन्नेनालभ्यंवरंतत्प्रार्थ्यतांभवान्
त्वेत्थं भगवद्वाक्यंसमुत्तस्थौ ततोनृपः । बद्धाञ्जलिपुटोनम्रोभक्त्योवाच जनार्दनम्

श्वेत उवाच

स्वामिन्यदि प्रसादस्ते मयि जातः सुदुर्लभः ।
सारूप्यमथ सम्प्राप्य स्थास्यामि तव सन्निधौ ॥ ५० ॥
स्थास्ये यावन्नृपत्वेऽहं मद्राज्ये नो जनः क्वचित् ।
अकाले म्रियतां जन्तुः काले चेन्मुक्तिमाप्नुयात् ॥ ५१ ॥
तच्छ्रुत्वा भगवान्प्राह श्वेतराजानमुत्तमम् ॥ ५२ ॥

वेत! ते वाञ्छितंभूयात्तिष्ठ त्वं ममदक्षिणे । भुक्त्वावर्षसहस्रंतुस्वराज्यंसुसमृद्धिमत्
म निर्माल्यभोगेनक्षीणशेषाघसञ्चयः । सुनिर्मलान्तःकरणोमत्सायुज्यमवाप्स्यसि
दसागरयोर्मध्येमुक्तिस्थानेसुदुर्लभे । मदीयाऽवतारस्यविष्णोर्मत्स्यस्वरूपिणः

सम्मुखीनोवसत्वंहिस्फटिकामलविग्रहः। ख्यातिंयास्यसिभूर्लोकेश्वेतमाधवसं
युवयोरन्तरालेयेप्राणांस्त्यक्ष्यन्तिमानवाः। तिर्यञ्चोऽपिचकीटावाध्रुवंतेमुक्तिम
अमरा यत्र मरणमिच्छन्ति किमुमानवाः। तवोत्तरस्यां दिशियत्सरःपापनि
तत्र स्नात्वाउपस्पृश्यतदीयेदक्षिणेतटे। उभयोर्दृष्टिपूतःसंस्त्यक्तवाप्राणान्वि
आसमन्तादिदं क्षेत्रं यत्रतत्राऽपिमुक्तिदम्। मूढात्मनांविश्वसितुंप्रधानंस्थानमी
तव राज्ये तु येलोकाममनिर्माल्यभोजिनः। मृतिराकालिकीतेषांनकदाचिद्भ
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्ण
खण्डान्तर्गतोत्कलखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसम्वादे
श्वेतमाधवोपाख्यानवर्णनंनामसप्तत्रिंशोऽध्यायः ॥ ३७ ॥

—::०::—

# अष्टत्रिंशोऽध्यायः

## भगवतःप्रसादनिर्माल्यादिमाहात्म्यवर्णनम्

### जैमिनिरुवाच

इतिदत्त्वावरंतस्मैश्वेतराजायवैपुरा। जगामाऽन्तर्हितोविप्राःप्रासादान्तःस्थितो
समस्तजगदाद्याश्रीःसृष्टिस्थितिविनाशकृत्।वैष्णवीशक्तिरतुलाविष्णुदेहार्द्ध
सुधोपमं सुपक्वान्नं भुङ्क्ते नारायणः प्रभुः। तदुच्छिष्टोपभोगो हिसर्वाघक्षय
नताद्दृशसमंपुण्यंवस्त्वस्तिपृथिवीतले। [ प्रायश्चित्तमशेषाणामपापानांपरि
भगवत्पादपद्मानुप्रेक्षणोपासनादिभिः]। पापसंस्कार कर्तॄणां सम्पर्कात् न दु
पद्मायाः सन्निधानेन सर्वे तेशुचयःस्मृताः। विष्ण्वालयगतंतद्धिनिर्माल्यंपवि
स्पृशन्त्यन्नं न दुष्टंतद्यथाविष्णुस्तथैव तत्। व्रतस्थाविधवाश्चैवसर्वेवर्णाश्रम
तत्प्राशनेन पूयन्ते दीक्षिताश्चाग्निहोत्रिणः। दरिद्रःकृपणो वाऽपि गृहस्थःप्र
स्वदेश्याः परदेश्या वा सर्वेसत्रसमागताः। नाभिमानप्रकुर्वीरन्थ्य ...निर्माल्य

तया लोभात्कौतुकाद्वा क्षुधासंशमनेनवा आकण्ठभक्षितंतद्धि पुनाति सकलांहसः

सर्वरोगोपशमनं पुत्रपौत्रप्रवर्द्धनम् ।
दारिद्र्यहरणं श्रेष्ठं विद्यायुःश्रीप्रदं शुभम् ॥ १० ॥

क्षपातो महांस्तत्र विष्णोरमिततेजसः । निन्दन्ति ये तदमृतं मूढाःपण्डितमानिनः
वयं दण्डधरस्तेषु सहते नाऽपराधिनः । येषामत्र स दण्डश्चेद्ध्रुवातेषांहि दुर्गतिः

कुम्भीपाके महाघोरे पच्यन्ते तेऽतिदारुणे ।
न विक्रयः क्रयो वाऽपि प्रशस्तस्तस्य भो द्विजाः !॥ १३ ॥
निर्माल्यं जगदीशस्य नाऽशित्वाऽश्नामि किञ्चन ।
इति सत्यप्रतिज्ञो यः प्रत्यहं तच्च भक्षयेत् ॥ १४ ॥

वंपापविनिर्मुक्तः शुद्धान्तःकरणो नरः । स शुद्धं वैष्णवस्थानं क्रमाद्यातिन संशयः
चिरस्थमपि संशुश्कं नीतं वा दूरदेशतः । यथातथोपयुक्तं तत्सर्वं पापापनोदनम् ॥
कुक्कुरस्य मुखाद्भ्रष्टं तदन्नं पतितं यदि । ब्राह्मगेनाऽपि भोक्तव्यमितरेषांतुकाकथा
पोष्य तिष्ठता वाऽपि नोपवासं च कुर्वता । अशुचिर्वाप्यनाचारोमनसापापमाचरन्

प्राप्तमात्रेण भोक्तव्यं नाऽत्र कार्या विचारणा ॥ १८ ॥

वेधान्नं जगद्भर्त्तुर्गाङ्गं वारि समं द्वयम् । दृष्टेःस्वर्गादिसम्प्राप्तिर्भक्षणाच्चाऽघनाशनम्

जगद्धात्र्या हि यत्पक्वं वैष्णवेऽग्नौ सुसंस्कृते ।
भुङ्क्तेऽन्वहं चक्रपाणिर्युगमन्वन्तरादिषु ॥ २० ॥

मद्वीपधरामध्ये सान्निध्यं नेदृशं हरेः । यादृशंनीलगोत्रेऽस्मिन्व्याजमानुषचेष्टितम्
रूपं परंब्रह्म सर्वचाक्षुषगोचरम् । प्रकाशते भो मुनयो न दृष्टं न श्रुतं क्वचित् ॥२२

तस्मै प्रवृत्तिरूपाय ब्रह्मणे परमात्मने ।
प्रवृत्तिरूपा शक्तिः श्रीः प्रवर्तयति यद्धविः ॥ २३ ॥

दश्नाति जगन्नाथस्तच्छेषं दुरितापहम् । किमत्र चित्रंभो विप्रायदुक्तंमुक्तिकारणम्
ऽल्पपुण्यवतां तत्र विश्वासश्च प्रजायते । वेदाचारप्रधानेषु युगेष्वेतत्प्रकीर्तितम्

महिमानं न वेदास्य विशेषाच्छूद्रतां कलौ ।

घोरे कलियुगे तस्मिंस्त्रिपादो धर्मविप्लवः ॥ २६ ॥
धर्मः स्यादेकपादस्तु कचित्तस्य भयाचरेत् । सर्वेऽनृतप्रधानाहि दाम्भिकाःशश्व
प्रायश्च धर्मविमुखा जिह्वोपस्थपरायणाः । न ध्यायन्ति तपस्यन्तिव्रतयन्ति
अधर्मबहुलाः सर्वे हिंसका लोलुपाः परम् । परेषां परिवादेन तुष्यन्ति स्वक
प्रसङ्गात्कौतुकाद्वाऽपि निघ्नन्ति परकर्म वै । क्षुद्रकार्याशयात्स्वस्यपरकार्यप्रवा

धर्मलब्धां स्त्रियं रम्यामवज्ञाय स्ववेश्मनि ।
परयोषिति निन्द्यायां प्रसक्ताः पशुचेष्टिताः ॥ ३१ ॥
अग्निहोत्रादिकं वाऽपि व्रतं नाऽन्यत्कचित्कचित् ।
जीविका तद्व द्विजातीनां नैषां वा पारलौकिकम् ॥ ३२ ॥

अव्रताधीतवेदेन अन्यायाऽऽप्तधनेन च । वित्तशाठ्येन च कृतं न तथा फल
प्रायः कलियुगे भूपाः प्रजावनपराङ्मुखाः । करादानपरानित्यं पापिष्ठाश्चौर्यवृ
वर्णसङ्करिणः सर्वे शूद्रप्रायाः कलौयुगे । हर्तारः पार्थिवाः एव शूद्राश्च नृपसेव
श्रौतस्मार्तादिकं कर्म न तथासदनुष्ठितम् । युगे चतुर्थे भो विप्राःपरलोकाय

दानधर्मः परो ह्येष नाऽन्योधर्मःप्रशस्यते ।
कर्मणा मनसा वाचा हितमिच्छेद्व द्विजन्मनाम् ॥ ३७ ॥

इतिह्योवाचभगवान्ब्राह्म गोमामकीतनुः । ब्राह्मणाय त्यसन्तुष्टाःसन्तुष्टस्तस्य
उभयत्र समो भूयाद्ब्राह्मणे च जनार्दने । यद्वदन्तिद्विजावाक्यं तत्स्वयंभगवा

यथा तथा वर्तमानो वर्णानां ब्राह्मणो गुरुः ।
भगवानपि देवेशःस साक्षाद्व ब्राह्मणप्रियः ॥ ४० ॥

सदाऽवतारं कुरुते ब्राह्मणार्थं जनार्दनः । तत्पालनार्थं दुष्टान्वै निगृह्णाति यु
ससर्जब्राह्मणानग्रे सृष्ट्यादौ स चतुर्मुखः । सर्वे वर्णाः पृथक्पश्चात्तेषां वंशेषु

तस्मात्कलियुगे तस्मिन्ब्राह्मणो विष्णुरेव च ।
उभौ गतिश्च सर्वेषां ब्राह्मणानां हरिर्गतिः ॥ ४३ ॥

हरिरेवाऽत्र सर्वेषां गतिः प्राप्ते कलौयुगे । शालग्रामादिके क्षेत्रे स्मर्यते कीर्त्यते

तस्मिन्नीलाचलेपुण्ये क्षेत्रे क्षेत्रज्ञवर्ष्मणि। जीवभूतः स सर्वेषां दारुव्याजशरीरभृत्
कलिकल्मषनाशाय प्रायो दुष्कृतकर्मणाम्।
दर्शनस्तवनोच्छिष्टभोजनैर्मुक्तिदायकः ॥ ४६ ॥
उच्छिष्टेन सुरेशस्य व्याप्तं यस्यकलेवरम्। तदाहारस्तदात्माहि लिप्यते न सपातकैः
निवेदनीयमन्यासु मूर्तिष्वीशस्य वर्तते। पावनं तदपि प्रोक्तमुच्छिष्टं तु विमोचकम्
भुङ्क्ते त्वत्रैवभगवान्पश्यत्यन्यत्रचक्षुषा। पुराऽयंप्रार्थितो देवो योगिभिःपरिवेष्टितः
निर्माल्योच्छिष्टभोगेन तव मायां जयेमहि।
अत्यन्तस्तिमिताक्षाणामनायासेन मुक्तिदः ॥ ५० ॥
शयनासनभोगाद्यै रमते च श्रिया सह। अत्र चेष्टा भगवतो वेदार्थ इति धार्यताम् ॥
समतिक्रान्तवेदो हि न कदाचित्प्रवर्तते। वेदरक्षार्थमेवास्य सम्भवो हि युगे युगे ॥
प्रमाणभूतो भगवान्विरुद्धं कथमाचरेत्। तस्मिन्विरुद्धं चरति जगदेव तथा भवेत्
आचारेण हि वेदार्थो नियतो धामतांगतः। मध्यदेशभवः पूर्वमत्रागच्छद्द्विजोत्तमः
शिष्टाचारैः सुविमलः शास्त्रार्थपरिनिष्ठितः।
सदा शान्तः सदा दान्तःकायवाङ्मनसैर्गृही ॥ ५५ ॥
स तीर्थविधिनादेवंसमभ्यर्च्यचसाग्निकः। त्रिरात्रमत्रोषितवान्विष्णवर्चनपरःशुचिः
यज्ञशेषं गृहस्थानां भोक्तव्यमितिशास्त्रतः। देवोच्छिष्टं न जग्राहअन्यपाकाभिशङ्कया
दैवतैरत्र संस्कार्यो देवयोग्यः कथं भवेत्। अयोग्यत्वाच्च नैवेद्यमग्राह्यंच भवेद्ध्रुवम्
अगृहीते च नैवेद्ये श्रोत्रियेणतदाद्विजाः। सर्वे च तस्यानुचरा नाभुञ्जन्तनिवेदितम्
ततः स व्याधिसम्मग्नो विह्वलीभूतविग्रहः। सकुटुम्बोऽभवन्मूकोभगवद्द्रोहसंयुतः
मनसाचिन्तयत्येवं निर्निमित्तं कथं नु मे। कुटुम्बसहितस्याभूत्पीडासर्वाङ्गभञ्जिनी
एवं चिन्तयमानस्यत्रिरात्रान्तेऽभवन्मतिः। नेदृशी व्याधिपीडाचसर्वेषामेकदाभवेत
को वा द्रोहः कृतोऽस्माभिरेतस्मिन्पुरुषोत्तमे।
न बुद्धिपूर्वकः किं स्यात्ततो मे व्याधिकारणम् ॥ ६२ ॥
मुहुरित्थं चिन्तयित्वाद्यौ नारायणंप्रभुम्। ध्यानावसानेतुष्टाव शास्त्रतत्त्वार्थदर्शक

शाण्डिल्य उवाच

चतुर्दशाऽपिया विद्याधर्मनिर्णयहेतवः । ताः सर्वास्तव वाक्यानि मुखपद्मविनि
ताभिरेवाऽऽचरेद्धर्ममिति शास्त्रार्थनिश्चयः । तस्य धर्मस्य रक्षार्थमवतारो
तमुल्लङ्घ्य वर्त्तमानो भवद्द्रोहकरो ध्रुवम् । अहं ते देवदेवेश! कर्मणा मनसा
धर्मशास्त्रमतिक्रम्य न वर्त्तेऽप्यर्थकामयोः । अनेकजन्मसाहस्रैः सञ्चितं पाप
दग्धुमत्राऽऽगतोदेवत्वद्दर्शनदवाग्निना । कोऽपराधः कृतो देव त्वच्छास्त्रपरि
सर्वाङ्गं बाधते यस्माद्दुग्रो व्याधिरहेतुकः ॥ ६६ ॥
ज्ञानतोऽज्ञानतो वापि त्वत्पादसरसीरुहे । कृतोऽपराधोयोदेव! तं क्षमस्व
भूमौ स्खलितपादानां भूमिरेवावलम्बनम् । त्वयिजातापराधानां त्वमेवशर
तवाऽपराधजं पापं त्वमेव च क्षमस्व मे ॥ ७१ ॥
वह्निसन्तापतोनश्येद्वह्निसन्तापजो व्रणः । तदिमां दुर्दशांदेव प्रारब्धांपापवि
लीलापाङ्गेन शमय अपवर्गैकहेतुना । मामुद्धर जगन्नाथ पतितं शोकसागरे
त्वद्दर्शनपथं यातः किं नु शोच्योभवेन्नरः । निसर्गकरुणाम्भोधे यस्त्वद्दर्शि
सदानन्दाब्धिसंमग्नोनशोचतिनकाङ्क्षति । नाल्पभाग्योह्यहंदेव त्वामद्राक्षं
अपवर्गान्तरायो मे ध्रुवमेषा विभीषिका । तत्प्रसीद जगन्नाथ! सेवकं द्रोहि
सेव्यसेवकसम्बन्धादपराधं क्षमस्व मे ।
इति स्तवान्ते तस्याऽऽशु देहपीडाऽगमत्तदा ॥ ७७ ॥
ददर्श सोथ गोविन्दंनृसिंहंभक्तवत्सलम् । दिव्यसिंहासनारूढंदिव्याऽलङ्का
आददानं श्रिया दत्तं परमान्नं कराम्बुजे । ग्रासावशेषं पात्रेषु क्षिपन्तं च मु
यावद्दत्तंवस्तुजातंतावदश्नन्तमत्वरम् । विलाससस्मितापाङ्गंहस्तेलक्ष्म्याऽप
तं दृष्ट्वा विस्मयाविष्टः शाण्डिल्यः स द्विजोत्तमः ।
सस्माराऽऽत्मकृतं द्रोहं नैवेद्याग्रहणेस्थितम् ॥ ८१ ॥
क्वाऽहं प्रादेशिकः प्राज्ञः सर्वज्ञाननिधिर्भवान् । क्व त्वं महदहङ्कारभूततत्त्ववि
त्वन्मायोमूढमनसो जानीयुः कथमीश ते ।

निरंकुशामनिर्वाच्यामिच्छां सृष्टिलयात्मिकाम् ॥ ८३ ॥

इतिस्तुवन्तंनृहरिस्तेनैवोच्छिष्टपाणिना । सिषेच ग्रासशिष्टांश्चसर्वाङ्गेद्विजसत्तमम्
तैःसिक्तैर्ब्राह्मणःसद्यःसुधासेकोपमैर्मुदा । बभौदिव्यवपुःश्रीमाञ्जीवन्मुक्तोयथा मुनिः
महिमानं हि भक्तेस्तु भक्ता एवविजानते । महतींसूतिपीडांतुवन्ध्यानानुभवेत्कचित्
इत्युदीर्य स्वयं गात्राद्उच्छिष्टं परमात्मनः । भुक्त्वा कृतार्थमात्मानं मेने श्रोत्रियपुङ्गवः
साधरणं धर्मशास्त्रं क्षेत्रेऽस्मिन्न विचार्यते । अयं तु परमो धर्मो यो देवेन प्रकीर्तितः
आधारप्रभवो धर्मो धर्मस्य प्रभुरच्युतः । इत्थं सञ्चिन्तयन्विप्रःकुटुम्बार्थेऽवशेषितम्
आजहार स्वयं मुष्ट्या ध्यानभङ्गमवापच । प्रबुद्धश्चिन्तयामासस्वप्नंतंविस्मिताशयः

अयमेव मम द्रोहो ह्यवज्ञासिषमीश्वरम् ।
नैवेद्याशनमाहात्म्यमजानन्परमाद्भुतम् ॥ ६१ ॥

अष्टादश चतुर्दश ब्रह्माण्डं यत्पदाम्बुजम् । धर्मद्रवेण प्रक्षाल्य अपुनास्त्वं तदम्बुना
यमर्चयन्ति शक्राद्या दिव्यभोगैरनुत्तमैः । समानुष्यकृतं भुङ्क्ते क्षेत्रेऽस्मिन्महदद्भुतम्
इत्याश्चर्यपरस्तेन स्वप्नलब्धेन वै द्विजाः । नैवेद्येन कुटुम्बं स्वं मार्जयामास सादरम्
ततः सर्वे नीरुजास्ते सुवाक्याहृष्टमानसाः । पुनर्जन्म मन्यमानाः शशंसुः क्षेत्रमुत्तमम्

नाऽस्त्यस्य सदृशं क्षेत्रं सप्तद्वीपावनीतले ।
यत्र स्वोच्छिष्टदानेन पापान्मोचयते नरान् ॥ ६६ ॥

पुरुषोत्तममाहात्म्यं क्षेत्रं परमदुर्लभम् । यतः स्वर्गश्च भोगश्च मुक्तिश्चैव करे स्थिता
आर्तानां भवकान्तारेभाग्यादत्रसमीयुषाम् । नानाभोगोपतृप्तानांमुक्तिमार्गःसुखंभवेत्
इत्थं ते हर्षमापन्नाः प्रलपन्तः परस्परम् । यथेष्टं भोजयामासुरन्योन्यं च निवेदितम्
ततस्ते निर्मला विप्रास्तरुणादित्यवर्चसः । देवा इव बभुः सर्वे निष्पापानिर्गतज्वराः
नैवेद्याशनमाहात्म्यंकथितं वो द्विजोत्तमाः । श्रुत्वाऽपिमहतःपापान्मुच्यतेपापकृत्तमः
निर्माल्यग्रहणस्याऽस्यफलंवक्तुं नशक्नुमः । साक्षाद्ब्रह्मस्वरूपेणध्रियतेवपुषाहितत्
पुष्पचन्दनमाल्यादि यदङ्गैरुपधार्यते । अपनीतं यथाकाले निर्माल्यं तत्प्रकीर्तितम् ॥
धारणं शिरसा तस्य तेनाङ्गेचापिमार्जनम् । सार्द्धानांकोटितीर्थानामभिषेकफलप्रदम्

भक्षणं गुरुतल्पादिपातकौघविनाशनम् ॥ १०४ ॥

लेप्या मूर्त्तिरियं विष्णोरन्येभ्योलेपउत्तमः । श्रीखण्डागुरुकर्पूरकस्तूरीकुङ्कुमनिम
प्रविष्टलेपस्नेहेन चन्दनागुरुदारुणा । शरीरे वासुदेवस्य इन्द्रद्युम्नेन कारित हरेन
प्रत्यहं भो द्विजश्रेष्ठा वर्षान्ते चाऽपनीयते । लेप्यानां लेपनिर्मोके दर्शनं न

अन्तरा चेत्पतेल्लेपः पिष्टं लिम्पेत्पुनश्च तम् ।

नान्यलेपः प्रशस्यो हि स विष्णोरङ्गसम्मतः ॥ १०८ ॥

चन्दनार्द्रशरीरं च दृष्ट्वा विष्णुं पुरा किल । सौगन्ध्याल्लोभयामास नृपपुत्रः सर्व
तस्य प्रीत्यै नियुक्तस्तु आकृष्याङ्गात्प्रलेपनम् । ददौ नृपकुमारायलिलिम्पे श्च

तावत्प्रदेशं कुष्ठं वै श्वेतं तस्याऽभवत्क्षणात् ।

स आसीत्कुष्ठपाणिस्तु तस्मै यो दत्तवान्किल ॥ १११ ॥

ततो वर्षावधिष्ठायीलेपःपुण्यतमःस्मृतः । निर्माल्यानांप्रधानंतद्घ्राणादेहो
पुरा दमनकं दैत्यं समुद्रोदकचारिणम् । बाधितारं जनानां वै मायाबलप
भगवानपि मायावी पितामहनिदेशतः । मत्स्यावतारेण विभुः प्रविश्य व

अन्विष्याऽऽकृष्य वेलायां निष्पिपेष महीतले ।

मधोः शुक्ल चतुर्दश्यां पतितो दानवोत्तमः ॥ ११५ ॥

भगवत्करसम्पर्कात्सुगन्धिरभवत्तृणम् । तस्यैव नाम्नाऽतः सम्यग्जग्राह
मालां कृत्वा हृत्प्रदेशमिलितांवनमालया । अचिन्तयत्तस्यगन्धंयावद्वस्तु

तस्याऽपि गन्धः सर्वेषां पुष्पाणां सौरभापहः ।

वर्णस्तु भगवन्मूर्तेस्तुल्योऽभूत्स सुशोभनः ॥ ११८ ॥

तस्य माला भगवतः परमप्रीतिकारिणी । शुष्कापर्युषिता वाऽपिनदुष्टा
तस्य सुग्रथितां मालांदत्त्वादमनकाख्ये । उत्पादयेन्महाप्रीतिंविष्णोर्यामु
अङ्गापकर्षितां मालां भक्त्या यो धारयेन्नरः । हयमेधसहस्रस्य फलं प्राप्

तुलसीकल्पितां मालां विष्णोरङ्गापकर्षिताम् ।

धारयेन्मूर्ध्नि कण्ठे च भक्तो यो विलसेद्भुवि ।

तावत्सङ्ख्यं वाजिमेधफलमव्यग्रमश्नुते ॥ १२२ ॥
निर्माल्यतुलसीपत्रं यावद्भक्षयते हरेः । तावज्जन्मसहस्रं तु विष्णुलोके महीयते ॥
हरेर्नैवेद्यमन्नं च तुलसीदलमिश्रितम् । प्रतिग्रासं सोमपानं फलं तत्सममश्नुते ॥
यावज्जीवं तु भुञ्जानो ध्रुवं मोक्षमवाप्नुयात् ॥ १२५ ॥
अर्घ्यशेषादिकं विष्णोस्तथाऽऽचमनोदकम् ।
पादोदकं स्नानवारि प्रत्येकं पापनाशनम् ॥ १२६ ॥
सर्वतीर्थाभिषेकाणां फलदं ग्रहनाशनम् । अलक्ष्मीपापरक्षोघ्नं भूतवेतालनाशनम् ॥
शवाद्यमेध्यसंस्पर्शदोषनाशनमुत्तमम् । सर्वदीक्षाव्रतफलप्रदमैश्वर्यवर्द्धनम् ॥ १२८ ॥
अकालमृत्युहरणं व्याधिव्यूहनिवर्हणम् । सुरागोमांसभक्ष्यादिपापसङ्घविनाशनम् ॥
एतैराप्लुतदेहस्तु शृणुयाद्यदि सूतकम् । नाशौचं विद्यते तस्य सर्वकर्माऽधिकारिणः
यावज्जीवं प्रतिज्ञाय यस्त्वेतान्येकमेव वा ।
गृह्णीयाद् भूरि वा स्वल्पं मुच्येद्विष्णोः प्रसादतः ॥ १३१ ॥
एवं तत्र वसन्देवो लोकानुग्रहकाङ्क्षया । रममाणः श्रिया सार्द्धमनायासविमोचकः
निर्माल्यपादाम्बुनिवेदनीयदानै[1]स्तदालोकनतत्प्रणामैः ।
पूजोपहारैश्च विमुक्तिदाता क्षेत्रोत्तमेऽस्मिन्पुरुषोत्तमाख्ये ॥ १३३ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वैष्णवखण्डान्तर्गतोत्कलखण्डे पुरुषोत्तमक्षेत्रमाहात्म्ये जैमिनिऋषिसम्वादे भगवतःप्रसादनिर्माल्यादिमाहात्म्यकथनंनामाऽष्टत्रिंशोऽध्यायः ॥ ३८ ॥

---

[1] वङ्गाक्षरमुद्रितपुस्तके "निवेदितान्नपानैः" इतिपाठः ।

# ऊनचत्वारिंशोऽध्यायः

## भगवतःपार्श्वपर्यायणसमुत्सवविधिवर्णनम्

मुनय ऊचुः

मुने! त्वत्तः श्रुतं सम्यङ्माहात्म्यं जगदीशितुः। निर्माल्यप्रभृतीनांचयथावद्रवि

श्रोतुमिच्छामहे ब्रह्मन्यात्रान्तरफलानि वै। शृण्वतां तत्त्वतो ब्रूहि यथोद्देशं

जैमिनिरुवाच

सर्वथा वर्त्तते लोकहिताय पुरुषोत्तमः। नानागुणविकासैश्च नानारूपविचेष्टि

नानारूपविलासेन नानात्मा च जगन्मयः। अहङ्कारं विना कर्मफलं नो

अहङ्कारेण बध्यन्ते कारागारे भवाभिधे। बुद्ध्यहङ्कारयुक्तस्तु यत्कर्माऽऽ

तस्यसद्गुणमाप्नोति फलं शुभमथाऽपरम्। बुद्धिस्तुत्रिविधातेषांगुणभेदे

तत्र ये सात्त्विकाः सन्तः फलावाप्तिपराङ्मुखाः। भगवत्प्रीतये कर्मकुर्वन्ते

परस्य स्पर्द्धया कीर्त्यै फलमुद्दिश्य वा पुनः। बहुवित्तव्ययायासै राजसं कर्म

गतानुगतिका ये च दृष्टार्थैकपरायणाः। प्रसङ्गात्फलमिच्छन्तस्तामसं कर्म

सात्त्विकानां जगन्नाथः सर्वदा सर्वभावनः।

ध्यातो दृष्टः स्मृतो वाऽपि मुक्तिदाता न संशयः॥ १०॥

राजसास्तामसा ये वै मूढात्मानः फलैषिणः। उत्सवादिकृतं कर्ममन्यन्ते

सम्भूय बहवो विप्रा आरभन्तेऽल्पकं विधिम्। बहुलायासदुःखंयत्कर्मतेषां

तेषामुद्धरणार्थाय विश्वासाय दुरात्मनाम्। यात्रा नानाविधा विप्रा वर्षे वर्षे

जन्मस्नानं महावेद्या उत्सवश्च प्रकीर्तितः। महायात्राद्वयं पुंसां कीर्तनात्पाप

दर्शनं दक्षिणामूर्तेस्तथा च शयनोत्सवः। सर्वपापहरश्चैषामुत्सवो दक्षिणा

अतः परं प्रवक्ष्यामि पार्श्वस्य परिवर्तनम्। शयितस्य जगद्भर्तुः परिवर्ति

नभस्यविमले पक्षे सम्प्राप्ते हरिवासरे। विष्णोः स्वापगृहद्वारि शनैर्गत्वा

मस्कृत्वा जगन्नाथं पर्यङ्के शयितं मुदा। अवच्छाद्य शनैर्गत्वा पूजयेदुपचारकैः ॥

प्रणम्य भक्त्या तत्पादौ गुह्योपनिषदैः स्तुवन्।
मन्त्रं चेमं पठन्देवं स्वापयेदुत्तरामुखम् ॥ १९ ॥

वदेव जगन्नाथ कल्पानां परिवर्तक !। परिवृत्तमिदं सर्वं येन स्थावरजङ्गमम् ॥२०॥
दिच्छाचेष्टितैरेव जाग्रत्स्वप्नसुषुप्तिभिः। जगद्धिताय सुप्तोऽसि पार्श्वेन परिवर्त्तय
रिवर्त्तनकालोऽयंजगतः पालनाय ते। तवाऽऽज्ञयाऽयंशक्रोऽपिध्वजेतिष्ठन्समुत्सुकः
ष्टुं त्वत्पादकमलं विमुञ्चञ्जलदैर्जलम्। महीतलं प्लावयति प्रजापालनहेतुकम् ॥२३॥
ति सम्प्रार्थ्य देवेशं वीप्सया तोषयेत्ततः। व्यजनैश्चामरैश्चैव वीजयेदनुकल्पकृत्
गन्धचन्दनैरस्य सर्वाङ्गं परिलेपयेत्। स्वादूनिक्षुविकारांश्च विकृतैः पायसैस्तथा
वकानि च हृद्यानिफलानिविविधानिवै। स्वादूपदंशानन्यांश्चघृतपूपान्सपायसान्

पक्वताम्बूलपत्राणि सोपस्काराणि च द्विजाः।
शय्यागृहद्वारि विभोः शनैर्भक्त्या निवेदयेत् ॥ २७ ॥

स्मिन्दिने हरे रूपं भवेद्यदि महाफलम्। देवमुद्दिश्य यः कुर्यात्सर्वमक्षयतां व्रजेत्
नं दानं जपो होमस्तपो जागरणं तथा। उपवासश्च नियमो व्रतान्तेद्विजतर्पणम्

साङ्गं व्रतमिदं कृत्वा विष्णुलोकमवाप्नुयात्।
यं यं कामयते चित्ते तं तमाप्नोत्यसंशयम् ॥ ३० ॥

ं वः कथितो विप्राःपार्श्वपर्यायणोत्सवः। अनायासेनलोकानामक्षयःसुखदायकः
ः परं वै शृणुत उत्थापनमहोत्सवम्। पूजयित्वा जगन्नाथं कौमुद्याख्येमहोत्सवे

अक्षक्रीडादिभिः पुष्पवस्त्रमाल्यानुलेपनैः।
ततोऽस्मिन्पौर्णमास्यायां रात्रावुत्सवसंयुतम् ॥ ३३ ॥

रिकेलादिभिर्द्रव्यैः पिष्टकैरर्चयेद्धरिम्। ततः प्रभाते सङ्कल्प्य कार्त्तिके व्रतमुत्तमम्
न तेनैव नयेद्यावदेकादशी सिता। तस्यामुत्थापयेद्देवं सुषुप्तं जगदीश्वरम् ॥३५॥
वत्पूजयित्वा तु निशामध्ये जगद्गुरुम्। उत्थापयेदिमं मन्त्रमाह्वयञ्छनकैर्मुदा
त्तिष्ठ देवदेवेश! तेजोराशे जगत्पते। वीक्षस्व सकलं देव प्रसुप्तं तव मायया ॥३७॥

प्रफुल्लपुण्डरीकश्रीहारिणा नयनेन वै । त्वया दृष्टं जगदिदं पावित्र्यं परमेष्यं
श्रौतस्मार्त्ताः क्रियाः सर्वाः प्रवर्त्तन्ते ततो ध्रुवम् ।
इत्युत्थाप्य जगन्नाथं वेणुवीणादिकस्वनैः ॥ ३६ ॥
वन्दिमागधसूतानां स्तुतिभिर्मङ्गलस्वनैः । शङ्खकाहालमुरजवादनैर्नृत्यगी
जयशब्दैस्तथा स्तोत्रैर्नयेत्तं नृत्यमण्डपम् ।
सुगन्धतैलेनाऽभ्यज्य स्नापयेत्पुरुषोत्तमम् ॥ ४१ ॥
पञ्चामृतैर्नारिकेलरसैः फलरसैस्तथा । सुगन्धाऽऽमलकेनाऽथ यवकल्के
घर्षयेत्तुलसीचूर्णैर्लेपयेद्गन्धचन्दनैः । पुष्पाधिवासितैस्तोयैस्तथा कर्पूर
कुशोदकै रत्नतोयैस्तथागन्धोदकैस्तथा । स्नाप्यमानंतथादेवंयेपश्यन्तिमु
क्षालयन्तिदृढंपङ्कंबहुजन्मोपपादितम् । ततः श्रीजगदीशस्य क्रोडेसम्वास
आपादान्मूर्धपर्यन्तं सर्वाङ्गं परिलेपयेत् । कुङ्कुमागुरुकस्तूरीकर्पूरैश्चन्दनै
पाटलोदकसम्पिष्टैः कालागुरुरसाप्लुतैः । दत्त्वा च मालतीमालां चन्द्रचर्णै
महोपचारैः सम्पूज्य विष्णुं नीराजयेत्ततः । कृताञ्जलिपुटो भूत्वा प्रार्थयेत्
चराचरमिदं सर्वं त्वदेकशरणं विभो ॥ अनुग्रहामृतालोकैः पावयस्व जग
नृत्यगीतैः प्रेक्षणकै रात्रिशेषं समापयेत् । शयनादुत्थितं देवं यः पश्यति
निद्रां मोहमयीं भित्त्वा ज्योतिः शान्तं व्रजन्ति ते ।
सर्वान्कामानवाप्नोति यान्यान्कामयते हृदि ॥ ५१ ॥
अश्वमेधसहस्रस्य फलं साङ्गं लभेत वै । कपिलाऽलङ्कृताधेनुकोटिदानस
पुण्यं चाप्नोति परमंसर्वतीर्थाभिषेकजम् । कार्त्तिक्यांपारणंकुर्याच्चातुर्मास्य
दामोदरस्य प्रतिमां स्वर्णनिष्केण निर्मिताम् ।
यथाशक्तिकृतां वाऽपि शालग्रामशिलास्थिताम् ॥ ५४ ॥
चक्रमूर्तिं भगवतः पूजयेत्प्रयतात्मवान् । रचयेन्मण्डपं शुभ्रमेकदेशं गृहस्य
अलङ्कुर्यात्पुष्पदामचामरैः सवितानकैः । भूमिभित्तीः सुधालेपैःस्तम्भैश्च
कालागुरूणां धूपैश्च धूपयेत्तद्गृहं शुभम् । तन्मध्येमण्डलंकुर्यात्स्वस्तिकं

दन्तः स्थपयेत्खट्वां करिदन्तमयीं शुभाम्। पट्टतूलीं तदुपरिवासयेत्पुरुषोत्तमम्
दामोदराकृतिं शङ्खपद्मपाणिं चतुर्भुजम्।
लक्ष्मीमालिङ्ग्य पद्मस्थां क्रोडस्थां वामपाणिना॥ ५६॥
क्तेभ्यो दातुमुद्यन्तं वरं दक्षिणपाणिना। सुनासं सुललाटं च सुनेत्रं सुभ्रूतिद्वयम्
वेशालवक्षसं देवं सर्वलावण्यसंयुतम्। सर्वालङ्काररुचिरं दिव्यपीतनिचोलिनम्
क्ष्मीं पद्माकरांवापिताम्बूलंददतींतथा। पञ्चामृतैः स्नापयित्वावासो युग्मेनवेष्टयेत्
जयेदुपचारैस्तं यथाविभवविस्तरैः। ताम्रदीपान्मृन्मयान्वाज्वालयेद्गव्यसर्पिषा॥
लेन वा शतं दीपवृक्षांश्चैव प्रदीपयेत्। ब्रह्माणं नारदादींश्च देवर्षींस्तत्र पूजयेत्॥
मोदरस्वरूपान्वै ब्राह्मणानपि पूजयेत्। वस्त्रयुग्मैर्माल्यगन्धैर्भक्ष्यभोज्यफलैस्तथा
र्थराजाभिषेकाङ्गं पूजाकर्म यथोचितम्। दामोदरस्य तेनैव विधिनेहाऽर्चनम्भवेत्
द्विष्णोरिति मन्त्रेण ब्रह्मादीनपि पूजयेत्। वेणुवीणादिकैर्गीतैः पुराणपठनेन च
होत्सवं प्रकुर्वीत ततो जागरणेन च। ततः प्रभाते विमलेऽग्निकार्यञ्च समाचरेत्
द्वाक्षरेणमन्त्रेण समिदाज्यचरूनपि। लाजान्मधुसमिन्मिश्राञ्जुहुयाच्चततः श्रियै
केनाऽष्टोत्तरशतं ब्रह्मादीनां तदन्ततः। अष्टाहुतीर्वै जुहुयात्क्रमादेकैकशस्तिलैः॥
ह्माणं नारदं दक्षं वसिष्ठं गौतमं तथा। सनत्कुमारमत्रिं च भरद्वाजञ्च कश्यपम्॥
व्याससमगस्त्यञ्च महादेवं ततःपरम्। विख्याता वैष्णवा ह्येते विष्णुरूपानसंशयः
एतान्सम्पूजयन्विप्रान्विष्णुः प्रीणाति तत्क्षणात्।
होमान्ते प्राशनं कृत्वा दद्यादाचार्यदक्षिणाम्॥ ७३॥
वर्णभूषितां धेनुं वस्त्रं धान्यञ्च भक्तितः। प्रीतये वासुदेवस्यभोजयेद्द्विजपुङ्गवान्
सर्वोपचारसहितं दद्याद्दामोदरं ततः॥ ७५॥
दामोदर! जगन्नाथ! त्वन्मयंविश्वमेव हि। त्वदाधारमिदंसर्वंत्वं धर्मःसर्वभावनः
त्वत्प्रसादात्व्रतञ्चीर्णं सुसम्पूर्णं तदस्तु मे॥ ७६॥
मोदरः प्रदाता च ग्रहीता च वृषध्वजः। प्रदीयते जगन्नाथः प्रीयतां मे जगद्गुरुः
त मन्त्रं जपन्दद्यादाचार्याय सुरोत्तमम्। समाप्य पूजयेद्भक्त्या ... प्रसादयन्

आचार्ये परितुष्टे तु तुष्टो भवति माधवः । तत्तद्द्रव्याणिच ततो दद्याद्विप्रे
ततः स्वयं वै भुञ्जीत इष्टैः शिष्टैः स्वबन्धुभिः ।
चातुर्मास्यव्रतं चेदं प्रतिष्ठाप्य विधानतः ॥ ८० ॥
यथोक्तफलसम्पन्नोविष्णुलोकमवाप्नुयात् । श्रुतिस्मृतिपुराणेषुनाऽतः पर
येनाऽनुष्ठितमात्रेण कृतकृत्योभवेन्नरः । विष्णोःप्रीतिकरंयाद्दृङ्नतथान्यद्व्रतं
तिलपात्रसहस्रैस्तु गवां चैवायुतायुतैः । कृष्णाजिनशतेनापि कन्यायामयु
दत्त्वा यत्फलमाप्नोतिकृत्वैतद्व्रतमुत्तमम् । सार्द्धत्रिकोटितीर्थानामभिषेक
प्राप्नोति तत्फलं विप्रा यं यं कामयते नरः ॥ ८५ ॥
इति श्रीस्कान्दे महापुराण एकाशीतिसाहस्र्यां संहितायां द्वितीये वै
खण्डान्तर्गतोत्कलखण्डे श्रीपुरुषोत्तक्षेत्रमाहात्म्ये जैमिनिऋषिसं
चातुर्मास्यव्रतविधिर्नामैकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

# चत्वारिंशोऽध्यायः

## भगवतोनृसिंहस्यप्रावरणोत्सववर्णनम्

### जैमिनिरुवाच

मार्गशीर्षेसितेपक्षेषष्ठ्याप्रावरणोत्सवम् । कृत्वाद्दृष्ट्वानरोभक्त्यावैष्णवंलोक
विधानं तस्य वक्ष्यामि शृणुध्वं मुनयोऽधुना ।
वासोऽधिवासं कुर्वीत पञ्चम्यां निशि कर्मवित् ॥ २ ॥
देवाग्रे मण्डपे कुर्यात्पद्ममष्टदलान्वितम् । दिक्पालान्पूजयेद्दिक्षु क्षेत्रपालं
चण्डप्रचण्डौ च वहिश्चतुर्दिक्षु प्रपूजयेत् । मध्ये पात्रं समाधाय प्रोक्षयेद्
द्विजान्स्वेनेतिमन्त्रेणच्छादयेद्दिव्यवाससा । सुधूपितंवस्त्रजातमेकविंशति
तन्मध्ये स्थापयेन्मन्त्रंवैष्णवञ्चसमुच्चरन् । अन्येनवाससातद्धिसमाच्छा

